पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यता दुःखेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यता अनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बहिर्द्धाशून्यता अनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मबहिर्द्धाशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यता अनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यता अनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यता अनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यता अनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै असंस्कृतशून्यता अनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यताऽनात्मिकेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बहिर्द्धाशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मबहिर्द्धाशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै असंस्कृतशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यता शान्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै वहिर्द्धाशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मवहिर्द्धाशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै असंस्कृतशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्व कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यताशून्येति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयो-गेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्रसर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बहिर्द्धाशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भ-योगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मबहिर्द्धाशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुप-

लम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्ध-भूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै असंस्कृतशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयो-

गेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यता आनिमित्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यता अप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बहिर्द्धाशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मबहिर्द्धाशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऽसंस्कृतशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ व परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यताऽप्रणिहितेति धर्म्मं देशयति तच्चाऽनुपलम्भ

योगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बहिर्द्धाशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मबहिर्द्धाशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै असंस्कृतशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयो-

गेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमुलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच्च सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यताऽनभिसंस्कारेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच्च सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच्च सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बहिर्द्धाशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच्च सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अध्यात्मबहिर्द्धाशून्यताविविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यच्च सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै शून्यताशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै महाशून्यताविविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै परमार्थशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै संस्कृतशून्यताविविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै असंस्कृतशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अत्यन्तशून्यताविविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवराग्रशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनवकारशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै प्रकृतिशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सर्व्वधर्म्मशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वलक्षणशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अनुपलम्भशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्वभावशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अभावस्वभावशून्यता विविक्तेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानान्यनात्मानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानानि शून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानान्यानिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानान्यनभिसंस्काराणीति धर्म्मं देशयति तच्चाऽनुपलम्भ-

योगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै स्मृत्युपस्थानानि विविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणान्यनात्मानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै सम्यक्प्रहाणानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादानानिमित्ता इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादानप्रणिहिता इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादाननभिसंस्कारा इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादान् विविक्ता इति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ऋद्धिपादभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाण्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाणि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाण्यनात्मानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाणि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाणि शून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाण्यानिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाण्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाण्यनभिसंस्काराणीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियाणि विविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै इन्द्रियभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभुमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलानि अनात्म्यनात्मकानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलानि शून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलान्यानिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलान्यनभिसंस्काराणीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलानि विविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बलभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशल-मूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यनात्मकानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गानि शून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यानिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गान्यनभिसंस्काराणीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गानि विविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै बोध्यङ्गभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमनित्यमिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गं दुःखमिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमनात्मेति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गं शान्तमिति धर्म्मं देशयति तच्चानुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गं शून्यमिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमानिमित्तमिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमप्रणिहितमिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गमनभिसंस्कारमिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गं विविक्तमिति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्याष्टाङ्गमार्गभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यनात्मिकानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यानि शून्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन ।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यानिमित्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यान्यनभिसंस्कारानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्यानि विविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आर्य्यसत्याभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानानि दुःखानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानान्यनात्मकानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानानि शान्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानानि शून्यानीति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानान्यानिमित्तानीति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्व-

कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानान्यप्रणिहितानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानान्यनभिसंस्काराणीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानानि विविक्तानीति धर्म्मं देशयति तच्चानुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै ध्यानभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणान्यनित्यानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणानि दुःखानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणान्यनात्मिकानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणानि शान्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणानि शून्यानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणान्यानिमित्तानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणान्यप्रणिहितानीति धर्मं देशयति तच्चाऽनुपलम्भयोगेन।

सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणान्यनभिसंस्कारानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणानिविविक्तानीति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै अप्रमाणभावनतायै धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्व-कुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणाम-यत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीरनित्याइति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्ती दुःखाइति धर्म्मं देशयति तच्चाऽनुपलम्भयोगेन । सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः ।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीरनात्मिका इति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीः शान्ता इति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीः शून्या इति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीरानिमित्ता इति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीरप्रणिहिता इति धर्मं देशयति तच्चाऽनुपलम्भयोगेन। सर्व्वकुशलमूलानि च न श्रावकभूमौ वा प्रत्येकबुद्धभूमौ वा परिणामयत्यन्यत्र सर्व्वाकारज्ञतायाः।

पुनरपरं सुभूते बोधिसत्त्वस्य महासत्त्वस्य कल्याणमित्रं योऽस्मै आरूप्यसमापत्तीरनभिसंस्कारा इति धर्मं देशयति तच्चाऽनुपलम्भ-

तथा मध्यतो बोधिसत्त्वो नोपैति। तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र कायसंस्पर्शप्रत्ययवेदनासत्तायां कायसंस्पर्शप्रत्ययवेदनाशून्यतायां कायसंस्पर्शप्रत्ययवेदनाविविक्ततायां पूर्व्वान्त उपलभ्यते। नापरान्त उपलभ्यते। न मध्यमुपलभ्यते। न ह्यन्या कायसंस्पर्शप्रत्ययवेदनाऽसत्त्वाऽन्या कायसंस्पर्शप्रत्ययवेदनाशून्यताऽन्या कायसंस्पर्शप्रत्ययवेदनाविविक्तताऽन्या कायसंस्पर्शप्रत्ययवेदनाऽस्वभावताऽन्यो बोधिसत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यं। इति ह्यायुष्मञ्छारद्वतीपुत्र या च कायसंस्पर्शप्रत्ययवेदनाऽसत्ता या च कायसंस्पर्शप्रत्ययवेदनाशून्यता या च कायसंस्पर्शप्रत्ययवेदनाविविक्तता या च कायसंस्पर्शप्रत्ययवेदनाऽस्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यं। सर्व्वमेतदद्वयमद्वैधीकारम्।

मनःसंस्पर्शप्रत्ययवेदनाऽसत्तया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शप्रत्ययवेदनाशून्यतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शप्रत्ययवेदनाविविक्ततया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शप्रत्ययवेदनाऽस्वभावतया पूर्व्वान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शप्रत्ययवेदनाऽसत्तयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शप्रत्ययवेदनाशून्यतयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शप्रत्ययवेदनाविविक्ततयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शप्रत्ययवेदनाऽस्वभावतयाऽपरान्ततो बोधिसत्त्वो नोपैति। मनःसंस्पर्शप्रत्ययवेदनाऽसत्तया मध्यतो बोधिसत्त्वो नोपैति। मनःसंस्पर्शप्रत्ययवेदनाशून्यतया मध्यतो बोधिसत्त्वो नोपैति। मनःसंस्पर्शप्रत्ययवेदनाविविक्ततया मध्यतो बोधिसत्त्वो नोपैति। मनः-

संस्पर्शप्रत्ययवेदनाऽस्वभावतया भव्यतो बोधिसत्त्वो नोपैति । तत्कस्य हेतोर्न ह्यायुष्मञ्छारद्वतीपुत्र मनःसंस्पर्शप्रत्ययवेदनाऽसत्तायां मनः-संस्पर्शप्रत्ययवेदनाशून्यतायां मनःसंस्पर्शप्रत्ययवेदनाविविक्ततायां मनःसंस्पर्शप्रत्ययवेदनाऽस्वभावतायां पूर्व्वान्त उपलभ्यते । नापरान्त उपलभ्यते । न मध्यमुपलभ्यते । न चान्या मनःसंस्पर्शप्रत्ययवेदना-ऽसत्ताऽन्या मनःसंस्पर्शप्रत्ययवेदनाशून्यताऽन्या मनःसंस्पर्शप्रत्यय-वेदनाविविक्तताऽन्या मनःसंस्पर्शप्रत्ययवेदनाऽस्वभावताऽन्यो बोधि-सत्त्वोऽन्यः पूर्व्वान्तोऽन्योऽपरान्तोऽन्यन्मध्यम् । इति ह्यायुष्मञ्छार-द्वतीपुत्र या च मनःसंस्पर्शप्रत्ययवेदनाऽसत्ता या च मनःसंस्पर्श-प्रत्ययवेदनाशून्यता या च मनःसंस्पर्शप्रत्ययवेदनाविविक्तता या च मनःसंस्पर्शप्रत्ययवेदनाऽस्वभावता यश्च बोधिसत्त्वो यश्च पूर्व्वान्तो यश्चापरान्तो यच्च मध्यम् । सर्व्वमेतदद्वयमद्वैधीकारम् ।

शतसाहस्र्याः प्रज्ञापारमितायाः द्वादशः परिवर्त्तः ॥ ० ॥

इति प्रथमखण्डः समाप्तः ॥ ० ॥

———